# BIBLIOTHECA INDICA

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL

New Series, Nos 1051, 1061, 1081, 1086, 1095, 1108, and 1121

---

THE

# ÇATAPATHA BRĀHMAṆA

OF

## THE WHITE YAJURVEDA,

WITH THE

## COMMENTARY OF SĀYAṆA ĀCĀRYA,

EDITED BY

ĀCĀRYA SATYA VRATA SAMAÇRAMI,

*Associate Member of the Asiatic Society of Bengal, Editor, Author, Commentator, Annotator, Compiler, Translator and Publisher of different Vedic Works, &c., &c.*

VOL. III, KANDA III.

---

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET

1905.

# ॥ शतपथब्राह्मणम् ॥

( शुक्लयजुर्वेदस्य माध्यन्दिनशाखीयम् )

## ॥ श्रीमत्सायणाचार्यकृतवेदार्थप्रकाशभाष्यसहितम् ॥



वङ्गदेशीयाशियाटिकसमितेरनुमत्या व्ययेन च,

सामश्रम्युपनामाचार्यसत्यव्रतशर्मणा

यथामति संशोध्य समीक्ष्य च सम्पादितम् ।

॥ ३ भा० । ३ का० ॥

( तृतीयकाण्डात्मकस्तृतीयोभागः )




कालीकोठा-राजन्वत्याम्,

१९६२ सम्वत्समायां बाप्तिस्तमिशनयन्त्रे मुद्रितम् ।

यज्ञनाम, ध्वरतिर्हिंसाकर्म्मा, तत्प्रतिषेधः"—इत्याह हि यास्कः ( निरु० १. ३. ४. )। यद्यप्यत्रैव काण्डे पशुसंज्ञपनं विहितम्, तथाप्यस्याध्वरत्वं न विहन्यते, यदग्नीषोमीयपशुसंज्ञपनस्याम्नायविहितत्वेन हिंसात्वाभावात्। तथाप्युक्तं भगवता यास्केन— "आम्नायवचनादहिंसा प्रतीयेत"—इति (निरु० १. ५. २. )। एव मेव सिद्धान्तितं मीमांसादर्शनेऽपि महामुनि-जैमिन्यादिभिः। तदेवं "दृष्टवदानुश्रविकः; स ह्यविशुद्धि"—इति ( सां० त० कौ० २ का० ) सांख्याचार्यसिद्धान्तो अजामध्यस्थमसौम्योदवत् किं न विश्लिष्ट इति सुधीभिर्विभाव्य मेव।

इह काण्डे यावन्त्याख्यानानि श्रुतानि, तेषु "सौपर्णीकाद्रव" नाम (११८, ६६२ पृ० ) प्रधानं मन्यतेऽस्माभिः। वस्तुतस्तैतदाख्यानं स्थाप्कुल-प्रयासागाद्य पूर्वतनम्; तथ मन्यथा ह्युपपद्येताऽन्न ब्राह्मणे तद्व्याख्यानम्। एतस्याख्यानस्याधियज्ञव्याख्यानतोऽधिदैवतं ( वैज्ञानिकं ) व्याख्यान मुत्कृ-ष्टतरम्, ज्ञेयं तु तद् गुरूपदेशादिभिः।

एतदेवाख्यानं रामायण—महाभारत—भागवताग्निपुराणादिषु बहुधा प्रपञ्चित मविपञ्चितश्च। तत्रत्यश्चेद् मुपाख्यानं किञ्चिदुपदेशदानाय, वक्तव्यविषयस्य गौरवत्वपरिहाराय च कविकाव्यनाप्रकृतं स्वं मन्तव्य मेव। तदिदं मस्य यज्ञीयव्याख्यानतोऽपि सम्प्रतीयते; तथाच "वाग्वै सुपर्णी, इयं कद्रू"—इत्यादिकं ( ६६१ पृ० ) द्रष्टव्यम्। तैत्तिरीयकेऽप्येव मेव—"इयं कद्रू, वाग् सुपर्णी, छन्दांसि सौपर्णेया"—इति ( सं० ६. १. ६. २. )। अनन्तरोक्त मभिप्रायेऽपि—"गायत्र्यादीनि छन्दांसि सौपर्णेयानि पक्षिणः"—इति। वैदिकाख्यायिकाना मेवैव गतिः प्रायः सर्वत्रोप-लभ्यते। उक्तं चैतन्मीमांसादर्शनेऽतिस्पष्टम्—"असद् ष्वसामान्याख्या-नम्"—इत्यादि ( जै० सू० १. २. १० श० भा० )। एतच्चैतन्मूलक-मज्ञाताख्यायिकावपुराणानामपि सर्वथा मेवमेव गति रिति सुधी-भिर्ह्वि सौकर्य्येण किमु वक्तव्य मस्तीति शम्।

वाणीकोठा-ग्राम-रामग्रती। }
सं १९६१। इ० १९०५। }

श्रीसत्यव्रतशर्म्मा।
(काश्यप, सामश्रमी, आचार्य्यः)

# ॥ अथमूलशुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | प्र॰ प्रा॰ क॰ | पृष्ठे |
|---|---|---|---|
| सुन्वं … | सुन्वे … | १. २. १४. … | १५ |
| पुष्यन्निति … | पुष्यन्निति … | १. २. २०. … | १७ |
| पुष्यन्निति … | पुष्यन्निति … | १. २. २०. … | १७ |
| मेन्ते … … | मेन्ते … | १. २. २१. … | १७ |
| मुत्तरं … … | मुन्तरं … | १. ५. ११. … | ६० |
| मित्येत्तनो … | मित्येत्तनो … | १. ५. ३१. … | ६४ |
| यद्वाचंयमो … | यद्वाचंयमो … | १. ५. ३८. … | ६६ |
| कुरमध्यालवा … | कुदमध्यालवा … | २. २. १५. … | १०५ |
| सद्भिरख्याना … | सद्भिख्याना … | २. ३. १ … | ११८ |
| वेदाग्रा … | वेदाग्रा … | २. ३. ७. … | ११८ |
| व्युत्थसुदिति- … | व्युत्थसुदिति- | २. ४. २. … | १२८ |
| श्लौर्ये … … | श्लौर्यं … | २. ६. ७. … | १६६ |
| सुभूता … | सुभूता … | २. ६ ८. … | १६६ |
| प्रत्यक्ं … | प्रत्यक्षं … | २. ६. ११. . . | १६७ |
| यक्कुन्दोभ्यः … | यक्कुन्दोभ्य … | ३. २. ८. … | २१० |
| वे … … | वै … … | ३. ३ ८. … | २४३ |
| ज्यामाना मौर्षधि* | ज्यामानामौषधि | ३. ४ १३. … | २४४ |
| भिक्षुवोन्नतु … | भिक्षुवोरन्नतु … | ३ ४. २०. … | २४६ |
| हामि … | हामिं … | ३ ५. ११. … | २५८ |

* एवमेव पाठो ग-घ पुस्तकयोः ।

| अशुद्धम् | | शुद्धम् | | प्र० अ० क० | | पृष्ठे |
|---|---|---|---|---|---|---|
| दुरीयसी | ... | दुरीयसी | ... | ४. १. ११ | ... | २७२ |
| मेतुद्रिग्यो | ... | मेतुद्रिभ्यो | ... | ४. १. ३२. | ... | २७६ |
| हैवास्था | ... | हैवास्य | ... | ४. २. १५. | ... | २८८ |
| प्रूवेश ... | ... | प्रवेश | ... | ५. ४. १६. | ... | ३४४ |
| युद्दै ... | ... | युद्दै | ... | ५. २. १. | ... | ३७६ |
| मुघ्ये- ... | ... | मुध्ये- | ... | ४. ५. १४. | ... | ४११ |
| मुग्ध्युनुव्यता | ... | मुग्धानुव्यता ... | | ५. ४. २२. | ... | ४१३ |
| यूप प्रकल | ... | यूपप्रकल | ... | ५. ४. ३०. | ... | ४१५ |
| एत ... | ... | एतं | ... | ५. ५. २. | ... | ४३३ |
| ॥ ११ ॥ | ... | ॥ १२ ॥ | ... | ६. २. १२. | ... | ४५४ |
| ऽस्मिन् ... | ... | ऽस्मिन् | ... | ६. ३. १२. | ... | ४६६ |
| ऽसिन् ... | ... | ऽसिनं | ... | ६. ३. १२. | ... | ४६६ |
| रेतुन्त्स्लोकान् | ... | रेतान्त्स्लोकान् | | ६. ३. २२. | ... | ४६८ |
| सुन्दधत्ते | ... | सुन्दधते | ... | ६. ३. ३०. | ... | ४७० |
| भूतोनर्घ्युः | ... | भूतोऽनर्घ्यं | ... | ६. ४. १५. | ... | ४८४ |
| मसुरिद्यु | ... | नन्नमुरिद्यु | ... | ७. ४. ३१. | ... | ५५१ |

स्यादेव मन्त्रोऽन्योऽपि चाशुद्धपाठः शोधकदृष्ट्यादिदोषतः ॥

---

# शतपथब्राह्मण-तृतीयकाण्डस्य सूचीपत्राणि।

## ॥ अथ प्रपाठकसूची ॥



## ॥ अथाध्यायसूची ॥

## ॥ अथ ब्राह्मणसूची ॥

---

## ॥ अथ कण्डिकासूची ॥

## ॥ अथ विषयसूची ॥

( १प्र० १ब्रा० )

अथ शालानिर्माणाय देवयजनपरिग्रहविधिः । तत्र देवयजनप्रदेशे प्रथमं प्राचीनवंशशालानिर्माणम्*, ततः उदीचीनवंशशालानिर्माणञ्च । ततस्तत्र दीक्षितस्य शयने नियमविशेषः, सर्वतः परिश्रयणञ्च । तत्राचैवर्णिकानां शूद्रादीनां मभिप्राप्तिनिषेधः, दीक्षितस्य सर्वैर्वाग्व्यवहारनिषेधः, दीक्षितस्य शालाप्रवेशश्चेति ।

( १प्र० २ब्रा० )

अथ दीक्षाविधिः । तत्र प्रथमं दीक्षाकालनिरूपणम् । ततः तीरार्थं परिश्रयणम्, क्रमात् नखनिकृन्तनम्, केशश्मश्रुवपनम्, स्नानम्, वासःपरिधानम्, पुनः शालाप्रवेशश्चेति ।

---

* एवमादिष्वलिखितोऽपि विधिशब्दः सर्वत्र कल्प्यः ।

( १प्र० ३ब्रा० )

अथ दीक्षाङ्गभूतायां प्राग्वंशप्रवेशे प्रयोगविधिः। तत्र प्रथमं अपः-प्रणयनम्। ततः समृद्धिफलकामस्य आदित्यचरुविधानम्, आदित्यपरि-चायकमन्त्रोदाहरणम्, तस्य व्याख्यानञ्च। तस्मिन् चरौ सामिधेनीपाठ-दशके प्राप्ते तत्स्थानदशविधिः, तस्याः पत्नीसंयाजान्तत्वविधानपूर्वकः समिष्ट-यजुर्निषेधश्चेति।

अथ दीक्षितस्य अभ्यङ्गविधिः। अक्ष्णोराञ्जनप्रकारादिकम्, दर्भैः पावनम्, अङ्गुली वाय्वादीनां पवित्रत्वादिवर्णनम्, अङ्गुलीनां न्यञ्चनकरणम्, मुष्टीकरणम्, वाग्यमनञ्च। ततस्तस्य दीक्षाहुत्यर्थं प्राग्वंशप्रवेशः, तत्र तत्सञ्चरप्रकारोपदेशः, ततस्तस्य गर्भ इति व्यपदेशश्चेति*।

( १प्र० ४ब्रा० )

अथ दीक्षाहुतिविधिः। दीक्षाहोमस्यास्य औद्ग्रभणनामकरणम्। तद्धोमीयस्य प्रथमस्य मन्त्रस्य व्याख्यानम्, द्वितीयस्य तात्पर्यव्याख्यानम्, तृतीयस्य न्यूनत्वविधानम्, चतुर्थस्य च व्याख्यानम्, पञ्चमस्य छन्दोद्वारा प्रशंसनञ्च। तत्र एकाहुतिपक्षोपन्यासः। ततः पूर्णाहुतिविधानम्, अक्षर-सङ्ख्याद्वारा मन्त्रप्रशंसनञ्चेति।

( १प्र० ५ब्रा० )

अथ कृष्णाजिनदीक्षाविधिः। तत्र कृष्णाजिनद्वयाहरणम्, एक-कृष्णाजिनमध्यप्रशंसनम्, कृष्णाजिनदीक्षार्थं भूप्रवेशनप्रकारः, तन्मन्त्र-व्याख्यानम्, ऋक्सामशब्दार्थनिर्वचनञ्च। ततः कृष्णाजिनारोहणम्, कृष्णाजिन-प्रशंसनम्, तत्पश्चाद्भागे एव प्रथमोपवेशनविधानञ्चेति।

---

* 'मनुष्यश्चर्त्विक्स्व दीक्षमाणोऽथ देवदेवीरुपैत्यन्तरतो दीक्षितो गर्भः'' का०।

अथ मेखलादीक्षाविधि । तदुपादानद्रव्यकथनम्, तस्या मुञ्जमिश्रितत्वाख्यानम्, केशवेणीवन्निर्माणम्, प्रसलवित्वेन मातृदेवत्यत्वम्, अपसलवित्वेन पितृदेवत्यत्वम्, तद्बन्धनमन्त्रस्य विधिव्याख्याने च ।

अथ वाससाच्छादनविधि । तादृशसंस्कृतस्य दीक्षितस्य विष्णुतुल्यत्वाख्यानञ्चेति ।

अथ वस्त्रान्ते कृष्णविषाणाबन्धनविधि । तत्र प्रथमं कृष्णविषाणोत्पत्त्याख्यायिका, प्रसङ्गाद् गर्भवर्णनम्, वाग्वर्णनञ्च । तद्बन्धने ऊर्द्ध्वमुखत्वविधानम्, बन्धनप्रकारोपदेश, तन्मन्त्रस्य विधिव्याख्याने च । तेनैव कृष्णविषाणेन कण्डूयनविधानम्, अन्येन कण्डूयननिषेधश्चेति ।

अथ दण्डदीक्षाविधि । तत्र दण्डकाष्ठनिरूपणम्, दण्डप्रमाणम्, दण्डोच्छ्रयणम्, तस्य दर्भैः पावनञ्चेति ।

अथ मुष्टीकरणवाग्यमनविधि । गृहीतवचस पुनर्वाग्व्यवहारे प्रायश्चित्तम्, वाग्यमनस्य प्रयोजनाख्यानञ्चेति ।

अथाध्वर्युकर्तृकदीक्षितावेदनविधि । तत्रावेदनवाक्यगतस्य ब्राह्मणपदस्य प्रयोजनवर्णनञ्चेति ॥

---

( २अ० १ब्रा० )

अथ वाग्विसर्जनकालविधानम् । तत्रादौ वाग्यमनविधानार्थाख्यायिका । वाग्विमोककालविषये पक्षान्तरोपन्यास, तन्मन्त्रविषये च पक्षान्तरोपन्यास, वाग्विमोकस्याभ्रभिमुखकर्त्तव्यत्वम्, तन्मन्त्रपदव्याख्यानम्, प्रसङ्गतो वनस्पतेर्यज्ञार्हत्वोपपादनञ्चेति ।

अथ व्रतश्रपणविधानम् । तत्राकहोमस्य पुराहुताभिधानेन प्रशसनम्, दीक्षितस्याप्यग्नितुल्यत्वाख्यानम्, शरीरस्थाना वागादीना मध्यस्थादिदेवत्वकथनञ्च । प्रथमव्रतविषयकपक्षद्वयोपन्यास देवमानुषकालयोर्विभागञ्चेति ।

अथ यजमानकर्तृक मुदकस्पर्शनम्, नाभ्युपस्पर्शनञ्च । दीक्षि तस्य मूत्रोत्सर्गे विशेषोपदेश, तत्र मन्त्र, तद्व्याख्यानम्, गृहीतलोष्ठस्य पुन प्रक्षेपे मन्त्रादिविधानञ्चेति ।

अथ दीक्षितस्य,—स्वापकाले अभये परिदानविधि, स्वापानन्तर प्रबोधे पुनर्निद्राया अप्राप्तौ मन्त्रजपविधि, व्रतमस्य क्रोधादेस्त्यागविधि, तद्व्याख्यानकविधिश्च । तस्यैव यज्ञार्थयाचनादिधनलाभे वाच्यमन्त्रस्य विधानम्, अस्तमयोदयकालयो प्रतिदिवस मध्वर्युकर्तृक दीक्षितस्य सम्प्रेषणम् दीक्षितस्यानियमितमस्थानस्थापनिषेध, प्रसङ्गाद् दीक्षितशब्दनिर्वचनञ्चेति ।

( ९प्र० ९ब्रा० )

अथ प्रायणीयेष्टिविधानम् । तत्राख्यायिका । तत्र पथ्यास्वस्ति-देवताकस्य, प्रथमयागस्य द्वितीयस्याग्नेयस्य, तृतीयस्य सौम्यस्य, चतुर्थस्य साविनस्य, पञ्चमस्यादित्यस्यादितिदेवताकस्य च क्रमेण विधानम् । तत्पञ्च कह्यप्रशंसा, ऋतुपरिज्ञानहेतुत्वेन पुन पञ्चसङ्ख्याप्रशंसा, दिग्ज्ञाननिवृत्ति-हेतुत्वेनापि पञ्चसङ्ख्याप्रशंसा च । तत्र प्रथमदेवतया उदीच्या दिश प्रज्ञानोपपादनम्, द्वितीयदेवतया प्राच्या दिश प्रज्ञानोपपादनम्, तृतीय-देवतया दक्षिणाया दिश प्रज्ञानोपपादनम्, चतुर्थदेवतया प्रतीच्या दिश प्रज्ञानोपपादनम्, पञ्चमदेवतयोर्ध्वाया दिश प्रज्ञानोपपादनञ्चेति ।

अथातिथ्याया इष्टे सोमाख्यशिरोरूपत्वेन वर्णनम् प्रायणीयो-दयनीययोस्तु बाहुद्वयरूपत्वेनेति ।

अथ प्रायणीयेष्टौ प्रयाजान्तत्वम्, न तु पत्नीसंयाजान्तत्व मिति निरूपणञ्चेति ।

( ९प्र० ३ब्रा० )

अथ सोमक्रयविधानार्थाख्यायिका । तत्र सोमक्रयणार्थमित्र सोमस्य विधानम् तत्प्रकारविधि, तद्व्याख्यानञ्च । ततो हिरण्यस्यापोद्धार-

विधानम्, तत्प्रशंसनम्, तथा चापोद्धारमन्त्रविधिव्याख्याने च। अथान्वारम्भ-
विधानम्। ततः सोमक्रयण्यवस्थापनम्, तस्या अभिमन्त्रणम्, तदभि-
मन्त्रणवाक्यानां तात्पर्यव्याख्यानम्, ततस्तस्या एवोदकप्रापणविधानञ्चेति।

( १प्र० ४ब्रा० )

अथ सोमक्रयण्या अनुनिष्क्रमणविधिः। तत्र प्रथमं तन्मन्त्र, तद्व्या-
ख्यानं च। ततो होमाय हिरण्यनिधानप्रशंसा, आज्यप्रशंसा च। ततः
समन्त्रकहोमविधानम्, तन्मन्त्रव्याख्यानञ्च। ततः सोमक्रयणीपादस्य परि-
लेखनविधिः, तन्मन्त्रश्च। ततस्तत्सप्तमपदपांसोः स्थाल्यां समन्त्रकं स्थापनम्,
यजमानाय तत्प्रदानम्, तस्य स्थालीस्थपदपांसोः यजमानकर्तृकं समन्त्रकं
ग्रहणम्, अध्वर्योश्च समन्त्रकमात्मोपस्पर्शनम्, ततः पत्न्यै तत्प्रदानम्,
नेष्टृकर्तृकञ्च तत्र मन्त्रवाचनम्, तथा सोमक्रयणीप्रदर्शनञ्चेति।

अथ सोमक्रयण्यास्त्रिविधस्वरूपाभिधानम्, तत्र मुख्यानुकल्पभेदोप-
देशः, श्वेतायाः सोमक्रयणीत्वनिषेधश्च। ततः अङ्गविकलत्वादिदोषदुष्टायाः
सोमक्रयण्या गोर्वर्जनीयत्वविधानम्, तस्या वागात्मकत्वनिर्णयश्चेति।

( २प्र० ५ब्रा० )

अथाध्वर्योः पात्रे वस्त्रपात्रप्रक्षेपविधिः, ततो वस्त्रप्रक्षालनविधा-
नञ्च। अध्वर्योः साङ्गुल्या हिरण्यबन्धनविधिः, सोमोपनहनाय समैषविधा-
नम्, उष्णीषवस्त्रविकल्पविधानञ्च। अध्वर्युयजमानयोरन्यतरस्य सोमोप-
नहनादानकर्तव्यताख्यानम्। प्राचीनवंशस्य पुरोदेशे उपरवप्रदेशेऽनुमादे-
याशस्यापनयनम्, निहितोदकुम्भस्य समीपे सोमविक्रयिणः स्थाननिर्दे-
शश्च। ततः क्रयदेशं समागच्छत्सु ऋत्विग्यजमानेषु अध्वर्योर्यजमानवाचनम्,
सोमं प्राप्य प्राङ्मुखोपवेशनम्, ततः सोमाभिमर्शनम् सोमविचिन्वनञ्च।
आस्तृते वाससि सोमोन्मानम्, तन्मन्त्रस्य विधानम्, तस्य च मन्त्रस्य

देवतादारा छन्दोद्वारा च प्रशंसनञ्च । सोमोन्मानप्रकारप्रदर्शनम्, मान-गतदशसङ्ख्याप्रशंसनम्, सोमाय प्रसारितस्य वस्त्रस्य पर्यन्तप्रदेशानेकाम सङ्ख्योष्णीषेण सम्भिकरणम्, तद्ग्रन्थिमध्ये समन्त्रक सुषिरकरणञ्चेति ।

( ३प्र० ३ब्रा० )

अथ सोमक्रयविधि । तत्पणनव्यवहार । तत्र प्रथम गो कलया सोमक्रयप्रस्ताव, अत्रैव गोमहत्त्वकथनाय प्रासङ्गिक दशविधगोवीर्यं कथनञ्च । ततो गो शफेन तत्क्रयप्रस्ताव, ततो गोपदा क्रयप्रस्ताव, ततो गोऽर्द्धेन क्रयप्रस्ताव, ततो गवा क्रयप्रस्ताव पञ्चम, अत्रैव गोवय-प्रशंसञ्च । पणनपूर्वकक्रयस्य प्रशंसा । तत एकहायन्या सोमक्रयण्या सह देयेषु हिरण्यादिषु दशद्रव्येषु मध्ये हिरण्ये दीयमाने यजमानपाठ्य-मन्त्रादिविधि, ततोऽजादिषु च तथैव ।

अथ सोमस्य ग्रहणम्, स्थापनम्, अनुदेशनम्, आच्छादनञ्च । अत्रैव धिष्ण्यानां वर्णनम् । ततोऽध्वर्योर्यजमानवाचनम् । अथ सोम मादायोत्था-नम्, शिरसि धृत्वा शकटसमीपे गमनादिकञ्चेति ।

---

( ३प्र० ४ब्रा० )

शकटमध्ये सोमस्थापनाय समन्त्रक कृष्णाजिनास्तरणम्, त स्पृष्ट्वा अपरमन्त्रवाचनम्, तस्य व्याख्यानञ्च । तत शकटेन सह सोमस्य वाससा बन्धनम्, तत्र मन्त्रविधानम्, तद्व्याख्यानञ्च ।

यदि दीक्षाया द्वे कृष्णाजिने सीव्यते स्याताम्, तयोरेकस्य तत्र आस्तरणे व्यवहारविधानम्, यद्येकम्, तत्कृष्णाजिनग्रीवाम् एवावकृत्य आस्तरणविधि । तत्र मन्त्रप्रशंसा च । चिबुकप्रमाणोन्नतफलकयोरन्तरेण सवत्सराशकर्षक मनःहृदयमेघम्, सुब्रह्मण्यस्य तस्याध स्थितिविधानम्,

पलाशशाखया तत्प्राशनविधिश्च। तयोरनडुहो पर्यन्यवर्णतायाः प्राशस्त्याभिधानम्, तत समन्त्रकं तयोः शकटे योजनम्, तन्मन्त्रव्याख्यानञ्च। तत शकटस्य पश्चात्स्थाद् गमनादिकम्, तत्तन्मन्त्रविधिव्याख्याने च। तत सुब्रह्मण्याह्वानम्, तदाह्वाननिगदव्याख्यानञ्च।

अथ प्रतिप्रस्थाता यग्नीषोमीयं पशुमादाय, शालाया पुरोदेशे गच्छन् सोमस्याभिमुखं स्थापयेदिति विधिः, तस्य च पशोर्वैरूप्यादिप्रशंसनम्, तत्र स्थापने मन्त्रविधानञ्च।

अथाध्वर्योस्तच्छकटोपस्तम्भनविधिः, तन्मन्त्राख्यानम्, तद्व्याख्यानञ्च। ततोऽध्वर्य्वादीना चतुर्णां मत्विजां शालामन्त्यामयनम्, तदामन्त्र्या औदुम्बरीत्वनाभिदर्भलविधानम्, मन्त्रेण तदभिमर्शनम्, मन्त्रेणैव तदुपरि कृष्णाजिनास्तरणम्, तत्र समन्त्रकं सोमासादनम्, तस्य मन्त्रपाठपूर्वकं शालाप्रवेशनम्, तत्समीपे उदपात्रस्थापनञ्चेति।

## ( द्वि० ९ब्रा० )

अथातिथ्येष्टिविधिः। तत्र प्रथमं सोमस्यातिथिस्वरूपत्वाख्यानम्, ततोऽतिथिसत्कारव्यवस्थापनञ्च। ततो हविरासादनम्, तत्रावयवादिकम्, नवकपालपुरोडाशः, कार्ष्मर्यमयाः परिधयः, आश्ववालः प्रस्तरः, ऐक्षवौ विधृतौ चेति विधानानि।

अथामिमन्थनविधिः। तत्राधिमन्थनप्रकारनिरूपणम्, दर्भतरुणकयार्विधानम्, अधरारणिकरणम्, उत्तरारण्यविधानप्रशंसा, प्रशंसनञ्च। ततो मन्त्रविधिः, अनुप्रहरणविधिः, अनुप्रहृतेऽग्नौ होमविधिश्च। अस्या इष्टेरिडान्तत्वविधानम्, अथानुयाजनिषेधश्चेति।

## ( द्वि० ३ब्रा० )

अथ तानूनप्त्रविधिः। तत्राख्यायिका, तत्र समवस्थानप्रदर्शनादिकञ्च। तानूनप्त्राख्याज्यग्रहणादिविधानम्, तानूनप्त्रे आज्यं सर्वं स्पृशन्ति तत्

यजमानायैव दातव्य मिति निर्णय, यजमानेन क्रियमाणस्य सामोपायस्य दैवे हुत मात्रैव मूल मित्याख्यानञ्चेति ।

( ३प्र० ४ब्रा० )

अथावान्तरदीक्षाख्यप्रायश्चित्तविशेषविधि । तत्र प्रथम माख्यायिकया तस्यावतारणम्, ततोऽवान्तरदीक्षाकल्पनप्रकार, ततस्तद्विधानम् । तत्र समिदाधानम्, तत्र चाख्यानम्, समिदभ्याधानम्, इत्यापि दीक्षा-ऊतिवत् प्राङ्व्यगमार मङ्गुल्यादिसमञ्जनस्य कर्त्तव्यतावगमनञ्च ।

अथ मदन्त्युपस्पर्शनपूर्वकराजाप्यायनविधि । तत्र चानुष्ठेयपदार्थक्रम विषये ब्रह्मवादिचोद्योदाहरणम्, आप्यायनप्रशंसनम्, विशेषतस्तस्य सारघ मधुकल्पनया मलसारत्वपरिहाराद्यात्मना च, प्रशंसनम्, तदाप्यायन-मन्त्रव्याख्यानञ्च ।

अथ निह्नवविधि । तत्कालनिर्णय, तन्मन्त्रविधिव्याख्याने च । ततोऽध्वर्युकर्त्तृकप्रैषादिविधानञ्चेति ।

( ३प्र० ५ब्रा० )

अथोपसद्दिष्टिविधि । तत्र प्रथम तत्कालविधानम्, तत्राख्यायिका च । तत प्रधानयागत्रयार्थ्योपसद्द्वयप्रकारोपदेशादिकम्, उपसदा नित्यविधानम्, तत्प्रशंसनम्, तन्मन्त्रत्रयविधानञ्च । ततो द्वादशोपसत्पक्षे कर्त्तव्य-विधानादिकञ्चेति ॥

---

( ४प्र० १ब्रा० )

अथ वेदिनिर्माणविधि । तत्र स्थाननिरूपणम्, वेद्या श्रोणिद्वयप्रमाणम्, आयामस्य पश्चाद्भागावधिप्रदर्शनम्, प्राचीनावधिप्रदर्शनम्, अंसद्वय-

निरूपणम्, यज्ञाग्न्यानयनक्रमम्, प्रणयनीयपात्रनिर्धारणम्, अंशविभाग स्योक्तविधानम्, यज्ञभागस्य द्रव्यविधानश्चेति ।

अथोत्तरवेदिनिर्माणविधि । तत्रोत्तरवेदिसाधारणविध्यर्थाख्यायिका, तद्विधानञ्च । तन्मानादिसाधनद्रव्यविधानम्, तत्प्रसङ्गात् कश्चिन्नियम-विधिश्च । ततस्तात्कालनिर्माणप्रकारोपदेश, तत्र खातायाः मृदस्थानाभा-दुत्तरवेदिं प्रति चतुर्दशस्य विधानम् ततोऽनुव्याहरनम्, तन्मन्त्रस्य तात्पर्याख्यानम्, वेदाः अद्भिरभ्युक्षणम्, तत्र सिकताप्रकिरणम्, तथोत्तर-वेदेर्यन्त्रियत्वप्रख्यया प्रच्छादनविधिश्चेति

( ४प्र० २ब्रा० )

अथोत्तरवेद्या मग्निप्रणयनप्रयोगविधि । तत्रेध्माभ्याधानम्, इध्माप्र-स्याथ उपयमन्यवयमनादिकम्, प्रोक्षण्यादानम्, विनयनम्, तन्मन्त्रे विशेष विधानम्, आघारयोनि, परिधीनां परिधानञ्चेति ।

( ४प्र० ३ब्रा० )

यज्ञभूमे पुनराक्रमणनर्थनम् । हविर्धानप्रवर्त्तनाभ्यनुज्ञाप्रकाश सावित्र होमविधि, तन्मन्त्राख्यानञ्च । ततोऽध्वर्युः पत्न्याः समञ्जनम् । तत प्रतिप्रस्थातृ उत्तरहविर्धानस्य दक्षिणवर्त्तन्यां हिरण्याधानपूर्वक चतु र्गृहीताज्यहोमविधानम्, हविर्धानयो प्रवर्त्तनकाले मन्त्रवाचनम्, तन्मन्त्र यान्याख्यानञ्च । ततो हविर्धानयोः स्थापनस्थाननिर्णय, तत्र स्थापनानन्तर तयो क्रमादभिमन्त्रणे उपस्तम्भनमेथ्युपहननच्छदिर्निधानानि, छदिर्निधान मन्त्रस्याधियज्ञपरतया व्याख्यानञ्च । ततो रराट्युपस्पर्शनम्, सूचीसमन्वया रक्षा तद्ग्रीवनम्, तत्र ग्रन्थिकरणम्, तदभिमर्शनञ्चेति ।

( ४प्र० ४ब्रा० )

अथ सोमाभिषवार्थोपरवखननविधि । तत्र प्रथम तत्खननस्य प्रयो-जनकथाख्यानम्, तत्खननाय अभ्र्यादानादिकम्, चतुर्णां खातानां

चत्वारो मन्त्राः, मृदुलावणम्, खननप्रमाणम्, खातावमर्शनञ्च । ततो-ऽध्वर्युयजमानयोर्मिथो हस्तसम्मर्शनम्, अवटप्रोक्षणम्, अवटेषु प्रोक्षणी-शेषावनयनप्रशंसनम्, तेषामवटानामुपरि बर्हिराच्छादनञ्च । ततोऽधि-षवणफलकयोरुपधानम्, पर्यूहनम्, परिदृंहणम्, परिकर्षणञ्च । तत-स्तदुपरि अधिषवणचर्मास्थापनम्, तत्र ग्राव्णां निधानञ्चेति ।

( ४प्र० ५ब्रा० )

अथौदुम्बरीविधिः । तत्र प्रथमं तस्याः सदोमध्ये स्थाननिरूपणम्, ततो-ऽवटखननार्थं मभ्यादानम्, अवटपरिलेखनम्, तत्खननम्, तत्रावटप्रागुदेशे औदुम्बर्याः स्थापनम्, बर्हिर्भिस्तस्याच्छादनञ्च । तत औदुम्बरीप्रोक्षण-साधनानां सह यवमात्रिविधानम्, ताभिस्तत्प्रोक्षणम्, प्रोक्षणीशेषस्योद-कस्य तत्रावटेऽवनयनम्, तदुपरि बर्हिरास्तरणञ्च । तत औदुम्बर्या उच्छ्रय-णम्, अवटमध्ये प्रक्षेपणम् पर्यूहणम्, पर्यूषणम्, अपां सुमनिनयनञ्च । ततस्तामभिपद्य यजमानवाचनम्, होमविधानम्, तद्धोममन्त्रव्याख्यानञ्च । ततस्तत्र छदिर्निधानम्, छदिषां नवसङ्ख्यात्वेन प्रशंसनञ्चेति ।

अथ सदोनिर्माणादिविधिः । तत्र प्रथमं सदसः उदगायतत्वविधानम्, सदोनिर्माणप्रकारोपदेशः, सदसः परिश्रयणम्, तन्मन्त्रव्याख्यानम्, तत सदसो द्वारशाखादीनां सीवनादिविधानञ्च । ततस्तत्र प्रथममाग्नीध्रस्य स्थाननिर्णय आग्नीध्रस्यार्त्तिपरिहारहेतुत्वेन प्रशंसनञ्चेति ।

---

( ५प्र० १ब्रा० )

अथ धिष्ण्यविधिः । तत्र प्रथमं सोमपर्यौकारव्याख्यानम् तद्दृष्टान्तमुखेन सोमयागस्यातिकर्त्तव्यताप्रतिपादनाय पुरुषस्य कृत्स्नयज्ञमुखत्वाभिधानम्, ततो धिष्ण्यानां सोमरक्षकत्वाभिधानम् प्रसङ्गात् सोमयागस्य देवमनुष्य-पितृद्वारेण सर्वजगत्स्थितिहेतुत्ववर्णनञ्चेति ।

( ५प्र० २ब्रा० )

अथ वैसर्जनहोमविधिः। तत्र प्रथमं अग्नीषोमीयप्रयोगविधानम्। तत्र अग्नीषोमीयाज्यपृषदाज्ययोर्ग्रहणस्य विधानादिकञ्च। ततः आहवनीये वैसर्जनहोमविधानम्, तन्मन्त्रतात्पर्यकथनम्, पूर्वोक्तिश्रोयमनादीनां अति-देशनम्, प्रैषवैकल्याभिधानञ्च। ततो ग्रावादीनां सम्भाराणां माग्नीध्रे समुपस्थापनम्, तदाधारे मन्त्रवाचनादिकम्, अध्वर्योर्दिक्प्रोक्षणादिकम्, तृतीयवैसर्जनहवनञ्च।

अथोत्तरवेदेः पश्चाद्देशे बर्हिषि स्रुच आसाद्य हविर्धानस्य प्रवेशन-विधिः। तत्र दक्षिणहविर्धानस्य परिश्रिते मध्यप्रदेशे कृष्णाजिनस्योपरि सोमनिधानम्, तदुपस्थानम्, ततो हविर्धानप्रदेशात् निष्क्रमणञ्च। ततः आहवनीये समिदभ्याधानम्, प्रभृत्याद दीक्षितान्नभोजनगमनप्रहरणपो-वैसर्जनहोमं यावत् निषेधश्चेति।

( ५प्र० ३ब्रा० )

अथ यूपनिर्माणविधिः। तत्र प्रथमं यूपं छेत्स्यन्नाहवनीये होमः, ततः कुशतरुणकेन संवेष्ट्य तत्काष्ठस्य छेदनम्, प्रथमच्छिन्नस्य शकलस्य यूपावटे प्रक्षेपार्थं ग्रहणञ्च। ततो यूपस्याधःपातने प्रागादिदिक्पतनविकल्पनम्, प्रपतमानस्य तस्यानुमन्त्रणम्, तदैवाग्न्यन्वाधानहोमविधिस्तत्प्रशंसनञ्च। अत्रैव यूपमानस्य बहुविकल्पविधानम्, यूपस्याष्टाश्रित्वविधानञ्चेति।

( ५प्र० ४ब्रा० )

अथ यूपस्थापनविधिः। तत्र प्रथमं अवटनिर्माणार्थं अभिग्रहणम्, यूपशकलस्यावटे स्थापनम्, शकलप्रासनहोमश्च। ततो यूपाञ्जनम्, चषाल-प्रतिमुञ्चनम्, अग्निष्ठाञ्जनम्, यूपोच्छ्रयणम्, यूपमानम्, तन्मन्त्रस्याधियज्ञ-परतया व्याख्यानम्, यूपपर्यूहणम्, यूपमन्वारभ्य मन्त्रस्य वाचनम्, तन्म-

मन्त्रस्य तात्पर्याख्यानञ्च । ततस्तत्पाशोद्दीक्षणम्, तन्मन्त्रतात्पर्यान्वाख्यानञ्च । ततो रशनापरिव्ययनम्, तया यूपशकलावगूहनम्, स्वरुणामविवेचनञ्च । ततो लोकत्रयजयात्मना यूपस्य प्रशंसनम्, यूपपूर्वोक्तमानादिकथनम्, यूपस्याग्राश्रिताभिधानम्, यूपे निखातस्य स्वरोर्वहनञ्च प्रतिपत्तिकर्मत्वेन यूपप्रतिनिध्यात्मना होमस्याभिधानञ्चेति ।

( ५प्र० ५ब्रा० )

अथ यूपैकादशिनीविधिः । तत्र प्रथमं तद्रूपोद्भवः, रश्मोनाप्रकालेनोपयूपप्रशंसनम्, उपशयविधानम्, अग्निष्ठप्रमुखानां सर्वेषामेव यूपानामेकाग्र्य बोध्ध्रयण मिति विचारश्च । ततो एकादशिनीपक्षे यूपोच्छ्रयणक्रमसिद्धान्तादि, प्रसङ्गात् पात्नीवतपशुप्रयोगविधानञ्चेति ।

( ५प्र० ६ब्रा० )

अथ पशूपाकरणविधिः । तत्र प्रथमं पशुनियोजनाय यूपस्य कर्तव्यताख्यापनार्थाख्यायिका । ततोऽग्नीषोमीयपशोर्यूपे नियोगादिविधानम्, तत सार्थवादोपाकरणविधानञ्चेति ।

---

( ६प्र० १ब्रा० )

अथ पशुपाशविधिः । तत्र प्रथमं पशोर्बन्धनाय पाशकरणम्, तन्मन्त्रतात्पर्याख्यानञ्च । ततस्तस्यैव पशोः प्रोक्षणम् उपोद्यमम्, ललाटाञ्जनञ्च । ततो जुह्वमतो सादनम्, प्रवरायाश्रावणम्, पुनराश्रावणम्, यजमानप्रवरनिमदार्थान्वाख्यानञ्चेति ।

( ६प्र० २ब्रा० )

अथ पशुसंज्ञपनप्रयोगः । तत्र प्रथमं होतुर्होतृषदने उपवेशनविधानम्, पर्यग्निविधि, तद्देशाद्यग्नविधानादिकञ्च । तत आप्याकाभ्यां

यूपशकलाभ्यां पशोर्ललाटोपस्पर्शनादिविधानम्, पशोः पर्यग्निकरणविधिश्च। तत आग्नीध्रप्रतिप्रस्थात्रध्वर्युयजमानानां शामित्रप्रदेशगमनस्य विधानम्, अध्वर्योस्तृणद्वयग्रहणादिविधिः, मैत्रावरुणप्रैषविधिः, अध्रिगुप्रैषविधानम्। ततो विशसनप्रदेशेऽध्वर्युकर्तृकतृणास्तरणादिविधानम्, संज्ञपनप्रकारविधानञ्चेति।

( ६प्र० ३ब्रा० )

अथ पत्नीकर्मविधिः। तत्र प्रथमं संज्ञप्ते पशौ पत्नीवाचनम्, तन्मन्त्रतात्पर्याख्यानञ्च, ततः पशोः प्राणमुखनासाचक्षुरादीनां पत्न्या प्रक्षालनादिकञ्च।

अथ पशुवपोत्खेदविधिः। तत्र प्रथमं वपाभ्यपणार्थं कार्ष्मर्यमयस्य विधानम्, तस्याः परिवासनादिकञ्च। ततो वपाश्रपणप्रकारोपदेशः, वपानुप्रासनम्, वपायागप्रशंसा चेति।

( ६प्र० ४ब्रा० )

अथ पशुपुरोडाशविधिः। तत्र पशुपुरोडाशस्य देवताविधानम्, वपानन्तर्यप्रशंसा च। ततो शमितुः पशुविशसनम्, शमितृसम्भाषणञ्च। अथात्र हृदयाभिघारणम्, अवदानक्रमविधानादिकम्, प्रसङ्गात् मनोता नामनिर्वचनञ्च। ततो वसाहोमविधानम्। ततो वनस्पतियागविधानम्, स्विष्टकृद्योगप्रकाराख्यानञ्च। ततो वसाहोमशेषेण दिग्व्याघारणम्, पशोः सम्मर्शनम्, तन्मन्त्रव्याख्यानञ्चेति।

( ६प्र० ५ब्रा० )

अथोपयाजविधिः। तत्रैकादश प्रयाजाः, एकादशानुयाजाः, उपयाजाश्चैकादश इति पशोरेकादशावत्तादीनां विधानम्, अथानुयाजार्थसमवत्तप्रस्थापनादिविधानञ्च। स्विष्टकृतः अनुयाजानामुपरिष्टात् पुर

स्वाहोपयानप्रशंसनम्, उभयायनामनिर्वचनम्, उपयामसमन्त्राणामाख्या-
नम्, प्रतिमन्त्रं प्रतिवषट्कारं सद्धोमविधानम् । ततोऽत्युपयाजनामकानां
चतुर्णां मुपयाजानां विधानादिकञ्चेति ।

---

( ७प्र० १ब्रा० )

अथ तदत्युपयाजमन्त्राणां व्याख्यानानि । ततो जाघन्या पत्न्याः संयाजविधानम् । ततो हृदयशूलेनावभृथगमनम्, परिक्रमिणो तद्धृदय-शूलसमर्पणम्, तदभिगूहनम्, तदभिमन्त्रणम्, विषयविशेषे तद्भूमौ निगूहन-निषेधश्चेति ।

( ७प्र० २ब्रा० )

अथ पञ्चैकादशिनीविधानाख्यायिका । तत्र एकादशिनीनां पशूनां कालविधानम्, अथ तेषां मुदङ्नयने, निबन्धने, वपाप्रचारे च तत्काल-स्यैवातिदेशविधिश्चेति ।

( ७प्र० ३ब्रा० )

अथ वसतीवरीग्रहणविधिः । तत्र प्रथमं माध्यायिकाख्यानम् । ततो वसतीवरीग्रहणार्थं गमनविधानम्, गृहीतानां तासां सर्वा सवनयार्थं विभजनविधानम्, गृहीतानां च गुणसमर्पणम्, ततो वसतीवरीग्रहण-कालनिर्णयादिकम्, तन्मन्त्रविधानम्, तद्व्याख्यानञ्च । तत्प्रशंसादनम्, यदि पश्चिमयस्योत्तरवेदेरपरिहरणस्य च प्रशंसनम्, उत्तरवेदीमान-व्यादाय आग्नीध्रमण्डपे तत्सादनम्, एतत्प्रसङ्गाद् वसतीवरीग्रहणनिर्वचना-दिकञ्च । ततो वसतीवरीग्रहणप्रवृत्तीनां आग्नीध्रमण्डपादन्यानां मध्या तत्प्रख्यापनेन यज्ञशालासम्पदा प्रशंसनञ्चेति ।

( ७प्र० ४ब्रा० )

अथ सवनीयपशुपर्यग्निप्रयोगविधिः। तत्र प्रथमं सोमोपावहरणम्, तन्मार्गनिरूपणम् तन्मन्त्रविधानम्, तद्व्याख्यानञ्च। तत उपावहृतस्य सोमस्योपस्थापनञ्चेति।

अथ प्रातरनुवाकप्रयोगविधिः। तत्र प्रथमं प्रातरनुवाकस्य सम्यक्कालनिर्णयः, प्रातरनुवाकस्य तत्तल्लिङ्गविषये मतान्तरोपन्यासः, समिदाधानञ्च। तत एकधनानयनार्थं होमविधानम्, तद्धोममन्त्र, तद्व्याख्यानञ्च। तत्रत्यानां मैत्रावरुणीनां विधानम्, तद्व्याख्यानञ्च। होतादीनां मैकधनानयनार्थं मार्गनिरूपणम्, तद्व्याख्यानाख्यानञ्च। तत प्रचरणीमहोस्थाल्यस्यामु होमविधानम्, तन्मन्त्रविधिः, तद्व्याख्यानञ्च। ततो हुतायां आहुत्यां यथासाद्यादिकम्। मैत्रावरुणचमसैर्नीग्रमनम्, तच्च विचारश्च। ततोऽम्नुसारणानन्तरं तेषां मेव होतादीनां देवयजने पुनरागमनविधानम्, तत आग्नीध्रचमस्य होतृचमस सम्वर्धनादाय निग्राभ्यासु आवयनार्थं पूर्वेधुराहृता वसतीवरीर्होतृचमसे त्रोयादिति विधानञ्चेति।

( ७प्र० ५ब्रा० )

अथ सोमाभिषवप्रयोगविधिः। तत्र प्रथमं दारुमयफलकयोरुपरि चर्मोपरि ग्रावणाम्, अधवीर्यावादानम्, तन्मन्त्रविधानम्, तस्य व्याख्यानञ्च। ततो वाग्यमनम्, सोमोन्मानम्, तत्सङ्ख्याविधानम्, सोमाभिमर्शनम्, निग्राभ्योदकैः सोमसेचनम्, प्रसङ्गात् निग्राभ्यशब्दनिर्वचनम्, सोमोपसर्जनम्, निग्राभ्याभिषवम्, सोमप्रहरणम्, तन्मन्त्रविधानम्, तस्य व्याख्यानञ्च। एवं त्रिरभिषवणम्, चिसम्भरणम्, त्रिस्त्रिरभिषवेणम्, मन्त्रजपश्च। ततो निग्राभ्योपायनम्, प्रसङ्गाद् ग्रावनामनिर्वचनम्, सोमप्रार्थनासुपो मन्त्रसवनश्च। अथ निग्राभ्याभ्यो होतृचमसेन ग्रहाणां ग्रहणोपक्रम विधानञ्चेति।

---

## ॥ अथ सर्वव्यालोच्यवचनसूची ॥

"अग्निं मथित्वाऽग्नावग्निं जुहवाम" ५. ६. ४, ५, ६।

"अग्निर्वै यज्ञ" ५. ७. १६.

"अग्नेरेतद्धं वै हिरण्यम्" २. ४. २, ८. ५. ४, ७. ५. १।

"अग्निरेव देवानां मूलमास, सहरक्षा इत्यसुररक्षस मत्तानाम्" ५. १. २१.

"अग्निर्वेद्यामिन्धे" २. १. ७.

"अग्निर्वा अहः, सोमो रात्रिः, अथ यदन्तरेण तद् विष्णुः, एतद्वै परिश्रद्‌मानं सर्वत्सरं करोति" ३. ४. १५.

"अग्निर्वै गायत्री" ७. ५. १०. [२. ६.

"अग्निर्वै देवतानां मुखं, प्रजनयिता स प्रजापतिः, स उ एव यजमान" ७.

"अग्निर्वै यज्ञः" १. ४ १८.

"अग्निर्वै सर्वा देवता" १. ३. १.

"अग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति" ६. ९. १८.

"अग्निर्हि रक्षसा मपहन्ता" ६. ९. ६.

"अग्निर्ह्येव ब्रह्म" २. १. ८.

"अग्निर्ह्येव यज्ञ" २. १. ८.

"अग्ने नय सुपथा राये •—• इत्यग्नि मेवैतत् पुरस्तात् करोति" ५. २. ११.

"अग्नेर्वा एतद् वैश्वानरस्य भस्म यत् सिकता" ४. १. ३६.

"अङ्गानि वै विश्वानि धामानि" ३. १. १४.

"अथ देवा यौगा मैव सृष्टा वादयन्तो निगायन्तो निषेदुरिति वै ते वयं मास्याम इति त्वा प्रमोदयिष्यामह इति" ३. ३. ६.

"अथ पुनरेत्यावहनीय मभ्यावृत्यास्ते। नेदस्य सन्नप्यमानस्याध्यक्षा असामेति। तस्य न कूटेन प्रघ्नन्ति, मानुषं हि तत्। नो एव पश्चात्कर्णं, पितृदैवतं हि तत्। अपि तस्य वैव मुखं तमयन्ति,

मेध्यं वा कुर्वन्ति तत्। नाह जहि मारयेति, मानुषं हि तत्" ६ २.१५

"अथ यत् पुरा नाश्नन्ति, यथा हविषोऽहुतस्य नाश्नीयादेव तत्; तस्माद् दीक्षितस्य नाश्नीयात्" ५. २. २१ [२७.

"अथ यद्दीक्षितोऽनृतं वा वाग्वदति, क्रुध्यति वा तस्मिन्व्याकरोति" २. १.

"अथाग्न्याधानादावाजन्ति, तौ यदि सध्यौ स्याता मन्यतरो वा सव्यस्तत्र विद्याद् वर्षिष्यत्यैषमः पर्जन्यो वर्षिमान् भविष्यतीत्येतद् विज्ञानम्" ३. १. ११.

"अथाभयेनाभाष्ट्रेय पशुं नयन्ति, त वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते, प्रतिप्रस्थातारमध्वर्युं, अध्वर्युं यजमानः। तदाहुः,— नैव यजमानेनान्वारभ्यो मृत्यवे ह्येनं नयन्ति, तस्मान्नान्वारभेतेति। तदन्वारभेत; न वा एतं मृत्यवे नयन्ति, यं यज्ञाय नयन्ति" ६. २. १०.

"अथैभ्यः सूर्यं दक्षिणा नागमत्, तं प्रत्यसृजन्" ४. १. १९.

"अथोल्लिखति सुसस्याः कृषीष्कृधीति" १. ५. २०.

"अध्वर्युः पृच्छति,— यजमान! किं मनेति, भद्र मित्याह; तन्नौ सहेत्युपांश्वध्वर्युः। ०—० यजमानः पृच्छति,— अध्वर्यो! किं मनेति, भद्र मित्याह, तन्म इति यजमानः" ३. ४. १७

"अनिन्धस्य व्रतो नामकामेत्" ४. १. १७.

"अनृतं हि वदेयुरेकं ह वै देवा व्रतं चरन्ति सत्यमेव, तस्मादेषां जित मनपजय्यं, तस्माद्यशः। एवं ह वा अस्य जित मनपजय्य मेवं यशो भवति, य एवं विद्वान्सत्यं वदति" १. २. ८.

"अन्तरिक्षं वा अनु रक्षश्चरत्यमूल मुभयतः परिच्छिन्नं, यथायं पुरुषोऽमूल उभयतः परिच्छिन्नोऽन्तरिक्ष मनुचरति। तद् वातेनैवं संविदानाश्च-रिक्षाद् गोपायेत्येवैतदाह यदाहेतोरन्तरिक्षात् यजुर्वेदेन वाते-नेति (वा॰ सं॰ १. ११. ९.)" १ २. १२.

"अन्नं वा उर्गुदुम्बरः" ३ १. २०

"अन्नं वै क्षत्रियस्य विट्" २.५ =

"अन्न वै सोम" ७ २ ८, ६.

"अन्न सोम" ३ १ २८

"अमूल वा इद मुभयत परिच्छिन्नं रक्षोऽन्तरिक्ष मनुचरति, यथाय पुरुषोऽमूल उभयत परिच्छिन्नो ऽन्तरिक्ष मनुचरति" ६. ३. १५.

"अमृत मायुर्हिरण्यम्" ६. ४. २६.

"अमृतत्वा ह्याप" ७ ५. १६.

"अमेध्यो वै पुरुषो यदनृतं वदति" १. ३. १८.

"अयं (मासम्) रक्षोऽयमानो न क्षीयते" ६. ४. ९०.

"असि वै ग्रास इत्याचक्षते" ६. २. ४.

"असुर्या वा यथा वाग् या अन्ते, नेदिहासुर्यां वाग् वदात्" ४. ३. १०

"अस्य सर्वस्य ब्राह्मणो मुखम्" ७. २. १४.

"अश्व सलिलस्य भारेऽश्व श्वेत श्यामौ सेवते (भस्यार्थ —) देविवें सलिल ०—०, अमित्रों अश्व श्वेत ०—०, यमः स्यामः ०—०। तस्य बालो न्यमस्ति न ममुं बालो धुनोति ०—०। (भस्यार्थ —) रसना हैव सा" ५. १. ४, ५,

"आत्मान वै सानैव दिवसो सोमस्तं देवेभ्य आत्मानं निष्क्रीणीथेति"

"आत्मा वै मनो हृदयम्, प्राण एषदाभ्यम्" ६. ४. ८. [५. १. ८.

"आधीतयजू षीत्याचक्षते" १. ४. ११, १४

"आपो रेत" ७. १. १

"आपो वै प्राणा" ६. ३. ४.

"आपो वै यज्ञ" ७. १. १.

"आपो वै समुद्र" ६. ५. ११

"आपो वै समुद्रोऽस्येवैतदद्भिर्तिं दधाति, तस्मादाप स्तायति भोगे शुष्यमाने न क्षीयन्ते" ७ ४ २७

"आपो ह वा ओषधीनां रसस्तस्मादोषधय सेवस्य खादिता न क्षियन्ति;

ओषधय उ द्वाप्त रसवत्साप्रापः पीता. केवल्यो न धिन्वन्ति ; यदैवोभय्य. संसृष्टा भवन्त्यथैव धिन्वन्ति, तर्हि ता सरसा भवन्ति"
४. ५. ७.

"आपो ह वै इदं जग्रहोतैवैतद्वीर्यमापः स्यन्दन्ते" ७. ५. २५.

"आसीनं वा एन सैव आगच्छति ; स आगत उत्तिष्ठति, तन्निराकरोति" २ ६. १३.

"इदं हि यदा वर्षत्यथौषधयो जायन्ते, ओषधीर्जग्ध्वापः पीत्वा तत एव रसः सम्भवति रसाद्रेत', रेतसः प्रजाः ; तद् यत एव सम्भवति, यतश्च जायते, तत एवैतन्मेधं करोति" ६. १. ४.

"इदं ह्याहुरिन्द्रो यजमान इति" ३. ३. १५.

"इन्द्र. सर्वा देवताः" ३. ३. २.

"इन्द्रश्रेष्ठा देवा" ३. ३. २

"इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने । गौरावस्कन्दि-न्नहल्यायै जारेति ( श॰ ब्रा॰ १. १. २. )। तद्यान्येवास्य चरणानि, तैरेवैन मेतत् प्रमुमोदयिषति" ३. १. १८

"इन्द्राग्नी हि विश्वे देवा." १. ३. १४.

"इन्द्रियं वीर्यं मिन्द्र" ७. २. १६.

"इन्द्रियं वै वीर्य मिन्द इन्द्रियेणैव तद्वीर्येण" ७. २. १५.

"इन्द्रो वै यज्ञस्य देवता" ३ ४. १८, ५. ४. १७ ; ७. ५. ५.

"इमा प्रजा पुनरभ्यावर्त्तं प्रजायन्ते" ६. ५. १८.

"इयं वा अदितिः •—• ऊर्द्ध्वं ह्येतस्यै दिक्" २. २. १६.

"इयं वै पृथिवी भूमा" २. ३. १६.

"इयं वै पृथिव्यग्निर्वैश्वानर." ७. १. ४.

"इयं वै पृथिव्यदितिः" २. ४. ३.

"इयं वै पृथिव्यदितिः सेयं प्रतिष्ठा" ३. १. १.

"इयं ह्येवादिति" २. २. ६.

"उत्तानेव वै योनिर्गर्भं बिभर्ति" १. ५. २९.

"उदीचीमेव दिशम् पथ्यया स्वस्त्या प्राजानंस्तस्मादत्रोत्तराहि वाग्
वदति कुरुपञ्चालत्रा वाग्घ्येषा निदानेनोदीची ह्येतस्यां दिशि प्रज्ञा-
नमुदीची ह्येतस्यै दिक्" २. २. १५.

"उदीची वै मनुष्याणां दिक्" ४. ५. २३.

"उदीची हि मनुष्याणां दिक्" २. ३. २२.

"उर्वशी वा अप्सरा, पुरूरवाः पति, अथ यत् तस्मान्मिथुनादजायत
तदायुरेव" ३. २. २२.

"उष्णीष माहरेति" २. ५. ३.

"उष्णीषेण विग्रथ्नाति ०—० अथ मध्येऽङ्कुल्याकाशं करोति" २ ५. १९.

"ऋणं ह वै पुरुषो जायमान एव मृत्योरात्मना जायते" ५. १. १६.

"ऋषिणाभ्यनूक्तम्—'मनसा सङ्कल्पयति, तद्वात अपि गच्छति। वातो
देवेभ्य आचष्टे, यथा पुरुष ते मनः'—इति" ५. ५. ७.

"एकं ह वै देवा व्रतं चरन्ति सत्य मेव ; तस्मादेषां जित मनपजय्यं, तस्मा-
द्यशः। यशो ह वा अस्य जित मनपजय्य मेवं यशो भवति, य एवं
विद्वान्सत्यं वदति" १. ३. ८.

"एको ह्येवायं पवते सोऽयं पुरुषेऽन्तः प्रविष्टस्त्रेधा विहितः, प्राण उदानो
व्यान इति" १. ३. १०.

"एतस्मादाख्यानं सौपर्णीकाद्रवम्" ५. १. ७.

"एतावान् वै पुरुषः" १. ४. २३.

"एते गन्धर्वाः सोमरक्षा जुगुपुरिमे धिष्ण्या इमा होत्रा" ४. १. ९.

"एते वै सवितारो यत् सूर्यस्य रश्मयः" १. ६. २४.

"एष वा यत्रेन्द्रो भवति यद्यजमान" २. ६. १०.
"एष वा इन्द्रो य एष तपति" ३. ३. १५.
"एष वै प्रजनयिता यन्मुष्कर" ५. ५. ८.
"एष वै सविता य एष तपति ०—० प्रतीची ह्येतस्य दिक्" २. २. १८

"कः प्रातरनुवाकस्य प्रतिगर इति, ज्याग्रहैवाध्वर्युरुपासीत, स यन्निमिषति स एवास्य प्रतिगर ; तदु तथा न कुर्याद्, यदि निद्रायादपि कामं स्वप्यात्" ७. ४. ११.
"किं तद् यज्ञे क्रियते येन प्राण सर्वेभ्योऽङ्गेभ्य प्रिय इति" ६. ५. २.
"क्षत्र वा इन्द्र" ७ २. १६, १८.
"क्षत्रं वै सोम" ७. ४. ३.
"क्षत्रं वै सोमो विडन्या ओषधय" २. ५. ८. [७. ४. ७.
"क्षत्रिय मायन्तमिमा प्रजा विश प्रत्यवरोहन्ति त मधस्तादुपासते"

"गर्भो वा एष भवति यो दीक्षते" २. ६. १२.
"प्रजा वै मध्ये प्रतिष्ठा" २. ४. १०.

"चन्द्र ते, वस्त्रं ते, छागा ते, धेनुस्ते, मिथुनौ ते गावौ, तिस्रस्ते-ऽन्या" २. ६. ४.

"त (सोमं) वै दशभिरेव क्रीणीयान्नादशभि" २. ६. १८.
"तत् (त्वाष्ट्र पशु) न संस्थापयेत्, पर्यग्निकृत मेवोत्सृजेत्" ५. ५. ८.
"तदाहु । सोमाकुर्याम्यपि मन्थेद, यशसा मेवादायाग्नमोयमरेत्याभिधाय नियुञ्ज्यादिति । तदु तथा न कुर्याद् यथाधर्मं तिरस्थ्या चिकीर्षेदेव तत् । तस्मादेतदेवानुपरीयात्" ५. ६. ७.
"तद् ह याज्ञवल्क्य चरकाध्वर्युरनुव्याजहार,— एव कुर्वन्तं प्राणं वा अय

मन्तरणादध्वर्युं प्राण एव ह्वयतीति, स ह स्म बाहू अन्ववेक्ष्याह,—
इमौ पवित्रौ बाहू कश्चिद् ब्राह्मणस्य वचो मभूवेति न तदाद्रि-
येत" ६. ३. २५.

"तद्धिरण्यमा ब्राह्मणं व्याख्यायते सौपर्णीकाद्रवं यथा तदास" २. ९. १.

"तद्वै वयसा मोजितुं वलिष्ठं यच्छ्येन" ३. ९. २५.

"तपसा वै लोकं जयति। तदस्यैतत् परं परं एव वरीयस्तपो भवति,
परं-परं श्रेयांसं लोकं जयति" ३. ५. २७.

"तपसो ह वा एषा प्रजापतेः सम्भूता यदजा" २. ६. ८

"तस्मादप्येतर्हि ०—० सोमा ०—० य एव नृत्यति, यो गायति, तस्मिन्ने-
वैता निमिश्लतमा इव" २. ३. ६.

"तस्मादाहुः पुण्यलोक ईजान इति" ५. १. १५.

"तस्माद् योऽप्येतर्हि त्रेधा सहस्रं व्याकुर्यादेकैवातिरिच्येत" २. ४. १३.

"तस्य यन्निखातं, तेन पितृलोकं जयति; अथ यदूर्ध्वं निखाताद्रा रश-
नायै, तेन मनुष्यलोकं जयति, अथ यदूर्ध्वं रशनाया आ चषालात्,
तेन देवलोकं जयति; अथ यदूर्ध्वं चषालाद् द्व्यङ्गुलं वा त्र्यङ्गुलं वा,
साध्या इति देवास्तेन तेषां लोकं जयति" ५. ४. २५.

"तस्य हि न हन्तास्ति न वधो येनेदं सर्वं स्तृतं तस्मा विश्वा भुवनानि
तस्थाहिति" ४. १. ४.

"तस्मै गन्धर्वा वेदानेव प्रोचिर इति वै वय विद्मेति वय विद्मेति" २. ३. ५.

"तस्यैवैतत् प्रायश्चित्तिं कुरुते, सोऽग्निरेव स्वयं विपल्यङ्गयते" १. ४. २, ३.

"तिर इव वै गर्भाः" २ १ ६.

"त्रयो वा अग्नि" ७. २. १८.

"ते (द्यावापृथिव्यौ) रसवत्यौ उपजीवनीये इमाः प्रजा उप-
जीवन्ति" ४. ५. २१.

"ते विदुरग्य वै नो विरक्षसमोऽस्यैव रूप मसाम" ३. ४. ८.

"तेऽसुरा आत्तवचसो हेऽलवो हेऽलव इति वदन्तः पराबभूवुः" ३. ५. २३.

"त्वष्टा वै पशूना मिष्टे" ५. ६. ११.
"त्वष्टा वै सिक्तं रेतो विकरोति" ५. ५. ८.

"दश वा इमे पुरुषे प्राणा आत्मैकादशो यस्मिन्नेते प्राणा प्रतिष्ठिता एता-
वान् वै पुरुष" ६. २. ३.
"दिवि हि सोम" ७ ५. २
"दीक्षिता दशनं मोपायन्ति, मेत्नोऽपहरानिति" ५. १. १४.
"देवाश्च वा असुराश्चोभये प्राजापत्या, प्रजापते' पितुर्दाय मुपेयुर्मन एव
देवा उपायन् वाच मसुरा" १. ५. १८.
"देवो वै सोम" ७. ५. २.
"देवो वै सोमो दिवि हि सोम" ३. ४. १३.
"देव्यो ह्याप" ७. ४. २५.
"दैव्यो वा एता विशो यत् पशव" ५. ६. ६.
"द्वय वा इद न तृतीय मस्ति सत्यं चैवानृतश्च; सत्य मेव देवा अनृतं
मनुष्या" २. ५. २, ["सत्यं वै"] ७. ५. १.
"द्वय वा इद सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुन प्रजननम्, ०—० मिथुन
मेवैतत् प्रजनन क्रियते" ६. ५ ७.

"धेन्वनडुहयोर्नाश्नीयात्" १. २ २१.
"धेन्वनडुहयोर्नाश्नीयात् । तदु होवाच याज्ञवल्क्योऽश्नाम्येवाह मंऽसलं चेद्
भवतीति" १. २. २१.

"न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वच ( मा० सं० ६. ३७. )"
"न दीक्षित काष्ठेन वा नखेन वा कण्डूयेत" १. ५. ३१. [७. ५. २४.
"न प्रतीचीमभिरा शयीत" १ १. ७.
"न ब्राह्मणो म्लेच्छेद्" १. ५. २४.

"नवाक्षरा वै गायत्री, अष्टौ तानि यान्यन्वाह, प्रणवो नवमः" २. २. १५.

"न वै देवाः सर्वेणैव संवदन्ते" १. १. १०.

"न वै देवाः स्वपन्ति" ३. १. २२.

"न वै यज्ञ प्रत्यक्ष मिवालभे यथायं दण्डो वा वाशी वा; परोक्षं वै देवाः परोक्षं यज्ञः" १. ३. २५.

"न स्त्रा स्तुतीयेरन्; य एषा परस्तरा मिव भवति, स एनाननुव्यवैति; ते प्रियं द्विषता कुर्वन्ति, द्विषन्तो रध्यन्ति, तस्मान्नस्तुतीयेरन्" ३. ६. ३.

"न दक्षिणं प्रतिगृह्णीयात्, पुरुयामानो हि दक्षोति" १. ३. ४.

"नाभिदघ्ना भवति, अत्र वा अन्नं प्रतितिष्ठति" ३. १. २८.

"नाभिदघ्ना भवति, अन्तो एव रेतस आश्रयः" ३. १. २८.

"निकृतदक्षिणां न प्रतिगृह्णीयात्" ४. १. २५.

"नैष मन्यत्र चरन्त मभ्यस्त मियात्, न स्वपन्त मभ्युदियात्" ३. १. २७.

"नो हान्ते गोर्भेष स्यात्" १. २. १७.

"पञ्च वा ऋतव संवत्सरस्य" ७. ५. ११.

"पवित्रं वा धाप" १. २. ११.

"पशवो वै पूषा" ७. २. १०, १२.

"पशवो वै रायः" २. ४. ८.

"पशवो वै वसु" ५. ६. ११, १६.

"पशोः प्राणानद्भि पद्युपस्पृशति, ०—०, तदस्मिन्नेतान् प्राणान् दधाति; तथैतस्यैव मेव देवाना हविर्भवत्यमृत ममृतानाम्" ६. ६. ४.

"पश्चाद्वरीयसी पृथुश्रोणिरिति वै योषा प्रशंसन्ति" ४. १. ११.

"पितृदेवत्य सोमः ०—० दक्षिणा ह्येतस्य दिक्" २. २. १७.

"पुत्रो वै वीरः" ५. ३. १२.

"पृथ्वीरसि,— अयस्मयी मेवास्मिंल्लोके, रजता मन्तरिक्षे, हरिणीं दिवि" ३. ५. ३.

"पुरुषसम्मितो यज्ञ" १. ४. २१.

"पुरुषो यज्ञः" १. ४. २२.

"प्रजापतिर्यज्ञ" २. १. ४.

"प्रजापतिर्वै ०—० सवस्योयानेवेष्ट्वाभवत्" ७. २. १—४.

"प्रजा वा यद्वै" ७. ५. २१.

"प्राची हि देवाना दिक ०—० उदीची हि मनुष्याणा दिक, ०—० ;
अथो मध्यस्य दक्षिणायै ०—० एषा वै दिक पितृणाम्" ५. ३. १२.

"प्राची हि देवानां दिक् ०—० उदीची हि मनुष्याणां दिक् ०—० एषा
(दक्षिणा) दिक् पितृणाम्" १. १. २.

"प्राची हि देवानां दिक् ०—० या दक्षिणा दिक् सा पितृणां ०—० या
प्रतीची सा सर्पाणां ०—० योदीची सा मनुष्याणाम्" १. १ ७.

"प्राची ह्येतस्य (अग्नेः) दिक्" २. ३ १६.

"प्राणोदानौ वै मित्रावरुणौ" ४. ५. १६

"प्राणो वै पशूनांवस्तेव प्राणेन प्राणिति तावत् पशुरेव यदस्मात् प्राणो-
ऽपक्रामति दार्वेव तर्हि भूतोऽनर्थ्यं शेते" ६. ४. १५, ८. ५. ५

"प्राणो वै हृदयम्" ६. ७. १५.

"प्रावृता वै गर्भा उल्वेनेव जरायुणेव" २. ६. १२.

"ब्रह्म वै यजुरस्याणि" ४ २. ११, ५. १०

"ब्रह्मचारिण्यं आचार्यं गोपायन्ति, तस्मात् यज्ञम् नेत्रोऽपहरा-
मिति" ५. १. १५.

"ब्रह्म वै बृहस्पतिर्ब्रह्म यज्ञ" १. ४. १५

"ब्रह्म वै बृहस्पति" २. ४ २, ५. ६ १२, ७ २. ११, १४.

"ब्राह्मणोऽनाम्नामाने द्वितीय नाम कुर्वीत, राध्नोति हैव य एवं विद्वान्
द्वितीय नाम कुरुते" ५ १. १६

"ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः" १. १. ८.

"मनुष्याननु पशव', देवाननु वयांस्योषधयो वनस्पतय." ५. १. १६.

"मनो देवा मनुष्यस्याजानन्ति" ३. ४. ६.

"महान्त्येव गोर्महिमेत्यध्वर्युः ; गोर्वै प्रतिधुक्, तस्यै शृतं, तस्यै शरस्, तस्यै दधि, तस्यै मस्तु, तस्या आतञ्चनं, तस्यै नवनीतं, तस्यै घृतं, तस्या आमिक्षा, तस्यै वाजिनम् ०—० एतान्येव दश वीर्याणि" २. ६. २, ३; २. ५. १, ३.

"महितो वै सोमो देवो हि सोमः" २. ६. ४.

"मिथ्या वा चापः" १. १. १०.

"य सर्वासा मोषधीना रस आसीत्, त यवेष्वदधु ; तस्माद् यत्रान्या ओषधयो म्लायन्ति, तदेते मोदमाना वर्द्धन्ते" ४. ५. १०.

"य इमे शीर्षंस्त्वारः कूपा इमावथ द्वा विसौ द्वौ" ४. ४ १.

"यजमानो वा आमिक्षा" ५. ४. १६.

"यज्ञो वै विष्णु" ५. ३. २, ८.

"यज्ञो वै विष्णु । स देवेभ्य इमां विक्रान्तिं विचक्रमे यैषा मियं विक्रान्तिरिद मेव प्रथमेन पदेन पस्पारार्थेद मन्तरिक्षं द्वितीयेन दिव मुत्तमेन" ५. २. ३.

"यज्ञो हि कृष्ण', स य स यज्ञस्तत् कृष्णाजिनम्" १. ५. २८.

"यज्ञो हि विष्णु" ५. २. १६.

"यत् ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे ०—० स एतांस्त्रिष्वनुत्तरेषु लोकेषु विन्यधत्त" ७. ५. १२.

"यद् वैकङ्कतं भवति चक्षुष्येवैतच्चक्षुर्दधाति" १. ३. १२.

"यत्र वा अर्हन्त मागतं नापयन्ति क्रुध्यति वै स तत्र तथा क्षामयितो भवति" ३. १. ३

"यथा राज्ञ आगतायोदक माहरेदेव मेतदिति" ३. १. ३१.

"यदा एवैते अ आस्वादयन्त अ जङ्घीकं अ भक्षाकं अ प्येव, मरद मार्तुर्भ वति" १. २. २.

"यथा राज्ञोऽराजानो राजकृत सूतग्रामण्य, एव मम्य छन्दांस्यभित साचयानि" ३. २ ७

"यथा वा चक्रारोऽग्निना ध्मात स्यात्" ७. ४. २६.

"यदग्नौ जुहोति, तद्देवेषु जुहोति, तस्माद् देवा सन्ति। यत् सदसि भक्षयन्ति, तन्मनुष्येषु जुहोति, तस्मान्मनुष्या सन्ति। अथ यद्धवि-र्धानयोर्नाराशंसैः सीदन्ति, तत पितृषु जुहोति, तस्माद् पितरः सन्ति" ५, १. २५

"यदा वै स्त्रियै च पुंसश्च संतप्यतेऽथ रेत सिच्यते, तत तत प्रजायते, पराङ्गुपावर्त्तित पराङिव रेत सिच्यते" ४. ३ १६.

"यदि दीक्षित मार्त्तिविन्देद् येनैवात कामयेत तेन भिषज्येद् यथात्रतेन भिषज्येदिति" २ १. १५

"यद् गायत्री श्येनो भूत्वा दिव सोम माहरत्, तेन सा श्येन सोमभृत्" ७ ५. १०

"यद्वीद किञ्चाश्नन्युद यवेद सर्व प्रतितिष्ठति" ४. ५ १

"यद्वै प्रतिरूप तच्छिल्पम्" १ ५ ५.

"यद्वै शुक्ल यज्ञस्य, तदाग्नेयम्, ०—० यद्वा चार्द्र यज्ञस्य, तत् सौम्यम्" २ २ ८, १०

"या प्रोक्षण्य परिशिष्यन्ते ता चवटे धवनयति,—'शुन्धन्ता लोका पितृ-षदना इति, पितृदेवत्यो वै कूप खात" ५ ४. ६.

"या ते धामान्युश्मसि गमध्यै ०—० इत्येतया निग्राभा भिगोति" ५ ४. १५.

"यावती वै वेदिस्तावती पृथिवी" ५ ५ १

"यावद्धेव प्राणेन आमिति, तावत् पशु, अथ यदास्मात् प्राणोऽपक्रामति, दार्वेव तर्हि भूतोऽनर्थं शेते" ६ ५ ९

"एष एव पशु मालभन्ते, यत्तौ यूपात् नादाचन" ५ ६ २।

"ये वै ब्राह्मणा शुश्रुवासोऽनुचानास्ते विप्रा" ४ ३ १२

"यो दीक्षते तस्य रिरिचान इवात्मा भवति" ६ २. २.

"यो दीक्षते, स विष्णुस्य यजमानस्य" १. ५. १७.

"यो दीक्षते स देवानामेको भवति १. १. ८, १०, २. १. १६, २२.

"यो ह्येवेम मानुषं ब्राह्मणं हन्ति स ह्येव परिचक्षते" ७. ५. १७.

"यो ब्राह्मणो यो यज्ञाज्जायते तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण
इत्येव ब्रूयात् ब्राह्मणो हि जायते यो यज्ञाज्जायते। तस्मादाहुर्न
सवनकृतं हन्यादेनस्वी हैव सवनकृतेति" १. ५. ४०.

"यो वै गर्भस्य काष्ठेन वा लोष्ठेन वा कण्डूयेदमासम् म्रियेत्" १. ५. ३१.

"यो वै ज्ञातोऽनूचान स समृद्ध" ४. ५. २६

"यो वै विष्णु सोम' स" ४. १. २१, ५. २ १६.

"योषा हि स्रुक्" ७. ५. २१.

"योषायै वा इमा प्रजा प्रजायन्ते" ७. ५. २५.

"योषा वा अम्बा" ७. ५. २१.

"योषा वा स्रुक्" ७. ५ २५

"योषा वा कटसोला" ७. ५. २५.

"योषित्कामा वै गन्धर्वाः" ३. ४. २०.

"रक्षसा ह्येष भागो यदसृक्" ६. ३. १४.

"रश्मयो ह्यस्य विश्वे देवा" ७ ३. ६, १२

"रसो वै वसा ---- रसोऽस्यमानो न क्षीयते" ६. ४. ३०.

"रसो वै वसाहोम" ६. ४. २५.

"रेत सोम" २. ५. १, ३. १. २८, ३. ४. ११.

"रेतो वै सोम" ७. १. २

रेतसो हि पशव" ५. ६. १२

"लस्पूजन्या स्पन्द्या प्रयोक्ष्यति" ३ ३. २५.

"विजयेव हि यः ---- अभिष्टौति कल्पयति" ६. ३ ३०.

'वचो वा वाच्यम्" २ ४ २ २ ५ १ ३ ५ ६ ४ ३ १५

'वचो वा वाच्यम् रेत सोमो नेद् नचेत्याज्येन रेतः सोम हिनसा नीति" ५ २ १७ ७ ४ २६

"वचो हि वा पाप' १ २ ६

वनस्पतयो हि यज्ञिया न हि मनुष्या यजेरन् यद् वनस्पतयो न स्यु' २ १ १०

'वनेषु अन्तरिक्ष ततानेति । वनेषु=वृक्षाग्रेषु वीयं वै वाजा, पुमाल्रो र्वन्त, दाम्नु ह्यथ मातुर्मनीषव, दिवृ=प्रजास, दिवि ह्युसौ सूर्यो हित, गिरिषु हि सोम" ३ १ ७

"वरुणा वा एषः यदश्व" २ ३ १८ ६ १ १

'वागेव सुपर्णी इय कद्रू" ५ १ २

"वागेवाग्नि, प्राणोदानौ मित्रावरुणौ चक्षुरादित्य, श्रोत्र विश्वे देवा" २ १ १३

"वाग्घि यज्ञः' ४ १ २२

"वाग् वै पथ्या स्वस्ति ०—० उदीचीं ह्येतस्यै दिक' ५ २ ७ १५

"वाग् वै रेवती सा यद् वाग् बह्व वदति तेन वाग्रेवती" ६ २ १२

'वाग् वै सरस्वती' ७ २ ७, ६

'वाचे हि धीयते यज्ञाय हि धीयते यज्ञो हि वाग्, धीयितो ह वै नामैतद् यद् दीक्षित इति" २ १ २०

'विद्वासो हि देवा ५ ६ १०

"विशो ग्रावाण ' ० ४ ३

"विशो विश्वे देवा" ७ २ १६ १८

"विशो वै मरुतो भूमो वै विट' ७ २ १०

'विष्णु यज्ञार्द्ध" १ ३ १

'वृत्रो वै सोम आसीत तद्यैतच्छरीर यद् गिरयो यदश्मानस्तदुशीरे तोमैव नेतत् समर्ढयति द्वारख करोति' ७ ५ ७

"वृत्रो वै सोम आसीत्, तस्यैतच्छरीरं यद् गिरयो यदश्मानस्तदेषो-शाना नामौषधिर्जायत इति ह स्माह श्वेतकेतुरौद्दालकि" ३. ४. १३.

"शुक्रं वै तद् यज्ञस्य यन्मानुषम्" ३. १. ३१.

"शरीरं ह्येवास्य (अग्नि) पीतुदारु •—• मांसं ह्येवास्य गुग्गुलु •—• गन्धो ह्येवास्य सुगन्धितेजनम्" ३. २. १८.

"श्रोण्यौ वीडं हरन्ति, अनसोदावहन्ति" २. ६. १७.

"श्येताक्ष्या आप्या नेयात्, सा स्यादप्रवीता •—• अवगाढाकूटाकाणाकर्णा-च्छिन्नाशाग्रप्ता" २. ४. १५.

"संवत्सरो वै प्रजापतिः" २. १. ४.

"स इन्द्र एव गर्भो भूत्वैतन्मिथुनं प्रविवेश" १. ५. २६.

"स एष श्रीर्षन् भक्तिश्चोऽनूक्तस्य गत्वा तस्मात् स यान्त इव स्पष्टा ह्येत मभ्यवमत् तस्मात् तं नाश्नीयात् स्पृष्ट्वैतदभिवान्तम्" ६. ४. ११.

'सत्यं वै शुक्रम्" ७. ४. २५.

"समानजन्म वै पयश्च (आज्यस्य) हिरण्यस्य, उभयं ह्यग्निरेत-सम्" २. ३. ८.

"सम्बन्धान्ताविव ह्येमौ लोकौ" १. ५ २.

"स यानुपचिरन्ति, तेऽमुष्मिंल्लोके प्रत्यर्च्चं भवन्ति, अथ याननुदिशन्ति तेनामुष्मिंल्लोके प्रत्यर्च्चं भवन्ति" ५. १. २३.

"सर्वं वै विश्वे देवाः" ७. २. १३.

"सर्वा ह वै देवता पशुमालभ्यमानमुपसङ्कल्पन्ते मम नाम ग्रहीष्यति मम नाम ग्रहीष्यतीति, सर्वासां हि देवतानां हविः पशु-स्तासां सर्वासां देवतानां पशौ मनांस्योतानि भवन्ति तान्येवैतत् प्रीणाति" ६. ४. १४.

"सर्वे ह वा एते स्यतोऽपक्रामन्ति प्राणा एव न" २. १. २१.

"सविता वै देवानां प्रसविता" २ ५ १०, ४ ३ १०, ७ २. २०,
४ १४, ५. ३.
"स हिरण्यं पदे निधाय जुहोति, न वा अनग्नावाहुतिर्हूयते ; अग्निरेतस
वै हिरण्यम्, तथो हास्यैषाग्निमत्येवाहुतिर्हुता भवति" २. ४ ३.
"सा यत् त्रि संवत्सरस्य विजायते, तेन प्रजापतेर्वर्ण" २ ६ ८
"सुवाक्ता एव बुभूषेत्" १ २. १६
"स्योन स्योन मिति, शिव शिव मित्येवैतदाह" २ ६ १०.
"स्थान मामाङ्गारे बम्भारे हस्त सुहस्त कृशानवेते व सोमक्रयण्या ०—०
एतानि वै धिष्ण्याना नामानि" २ ६. ११.

"हविर्वा एष देवाना भवति यो दीक्षते, तदेन मन्तर्जम्भ आदधाते,
तत्पशुनात्मान निष्क्रीणीते" ३ १ २१

---

## ॥ अथ कर्म्मसूची ॥

| कर्मनाम | प्र॰ ब्रा॰ क॰ | कर्मनाम | प्र॰ ब्रा॰ क॰ |
|---|---|---|---|
| अग्निप्रणयनम् | ४ २, १ | आग्नावैष्णवेष्टि . | १. ३ १. |
| अग्निमन्थनम् | ३ २ १६ | आज्यग्रहणम् | ५. २ ६. |
| अग्निष्टोम | १. १ १ | आतिथ्येष्टि .. | ३ ४ १. |
| अत्युपयाजयाग . | ७ १ १ | आग्रयणहोम . | ५. ३. १५ |
| अधिषवणम्. .. | ४. ४ १ | आसन्दीकरणम् ... | ३ १. २६. |
| अनुनिष्क्रमणम् | २. ४ १ | | |
| अनुयाजयाग | ६. ५ ८ | उत्तरवेदिव्याघारणम् | ४ १ २६ |
| अपाम्ययनम् | १. ३ १ | उपयाजयाग .. | ६. ५ ११. |
| अवान्तरदीक्षा | ३ ४ १. | उपसदिष्टि ... ... | ३. ५. २. |

| कर्म्मनाम | प्र॰ ब्रा॰ क॰ |
|---|---|
| सदोनिर्म्माणम् ... | ४. ३. १. |
| सवनीयपशुकर्म्म ... | ७. ४. १. |
| सामिधेनीप्रयोग ... | १. ६. ६. |
| सुब्रह्मण्याह्वानम् .. | ३. १. १७ |
| सोमक्रयणम्... ... | २. ६. १०. |
| सोमक्रयणावस्थापनम् | २. २. १. |
| सोमनिधानम् ... | ४. २. १८. |
| सोमपानम्... .. | २. ६. १ |
| सोमपर्य्याणहनम् . | ३. १. ७. |
| सोमाभिषव ... | ७. ५. १. |
| सोमासादनम् ... | ३. १. ३०. |
| सोमोन्मानम् ... | २. ५. १. |
| सोमोपनहनम् ... | २. ५. १८. |
| हविर्द्धाननिर्म्माणम् | ४. ३. ७. |
| हविर्द्धानप्रवर्त्तनम् ... | ४. ३. १०. |
| हविर्द्धानप्रवेशनम् ... | ५. २. १७ |

## ॥ अथर्षिनामादिसूचौ ॥

| नाम | प्र॰ ब्रा॰ क॰ |
|---|---|
| अङ्गिरसः | १. ५. १०, १४, ४. १. १२ द्र॰ |
| अप्सरा (उर्वशी) | ३ २. २२. |
| अहल्या . ... | ३. १. १८. |
| आदित्या ... | ४ १. १६ द्र॰ |
| उर्वशी (अप्सरा) | ३. २. २२. |
| ऋषय | १. ४ ४, २. १. ३, १२, २८. द्र॰ |
| कद्रू ... | २. ३. १; ५. १. २. |
| कुरुपञ्चालजा ... | २. २. १५. |
| कौशिक (ब्राह्मण) | ३. १. १९. |
| गन्धर्व (विश्वावसु) | २. ३. २. |
| गन्धर्वा (सोमरक्षा) | ५. ४. ९. |
| गौतम .. .. | ३. १. १९. |
| गौरावस्कन्दी... .. | ३. १. १८. |
| चरकाध्वर्यव ... | ६. ३. २४. |
| त्रिककुद (गिरिः) ... | १. ३. १२; |

---

## ॥ अथ सर्वसूची ॥



---

# शतपथब्राह्मणम्।

अथ

## तृतीयकाण्डम्।

॥ अथ प्रथम प्रपाठक ॥

॥ प्रथम ब्राह्मणम् ॥

॥ अपि वा प्रथमाध्याये प्रथम ब्राह्मणम् ॥



॥ हरिः ॐ ॥

देवयजन जोषयन्ते। स यदेव वर्षिष्ठः स्यात तज्जोषयेरन्यदन्यद्भूमेर्नाभिशयीता*तो वै देवा दिव मुपोदक्रामन् देवान् वा एष उपोत्क्रामति यो दीक्षते स सदेवे देवयजने यजते स यद्धान्यद्भूमेरभिशयीता†वर-तर इव हैष्टा स्यात् तस्माद्यदेव वर्षिष्ठः स्यात् तज्जोषयेरन् ॥ १ ॥

तद्वर्षं सत समः स्यात्। समः सदविभ्रंशि स्याद-

*, † तिशयीता'-इति सा० सम्मत इति डा० वेबर।

विश्वःस्मिं सत् प्राक्प्रवणः स्यात् प्राची हि देवानां दिगथो उदक्प्रवण मुदीची हि मनुष्याणां दिग्दक्षिणतः प्रत्युच्छ्रित मिव स्याद्देषा वै दिक् पितॄणाः स यद्दक्षिणाप्रवणः स्यात् क्षिप्रे ह यजमानोऽमुं लोक मियात्तथो ह यजमानो ज्योग् जीवति तस्माद्दक्षिणतः प्रत्युच्छ्रित मिव स्यात् ॥ २ ॥

न पुरस्ताद्देवयजनमात्र मतिरिच्येत। द्विषन्तः हास्य तद् भ्रातृव्य मभ्यतिरिच्यते कामः ह दक्षिणतः स्यादेव मुत्तरत एतद्ध त्वेव समृद्धं देवयजनं यस्य देवयजनमात्रं पश्चात् परिशिष्यते क्षिप्रे हैवैन मुत्तरा देवयज्योपनमतीति नु देवयजनस्य ॥ ३ ॥

तदु होवाच याज्ञवल्क्यः। वार्ष्णाय* देवयजनं जोषयितु मैम तत्सात्ययज्ञोऽब्रवीत्सर्वा वा इयं पृथिवी देवा देवयजनं यत्र वा अस्यै क्व च यजुषैव परिगृह्य याजयेदिति† ॥ ४ ॥

ऋत्विजो हैव देवयजनम्। ये ब्राह्मणाः शुश्रुवाःसोऽनूचाना विद्वाःसो याजयन्ति सैवाह्वलैतन्नेदिष्ठतमा‡ मिव मन्यामह इति ॥ ५ ॥

---

* 'वार्ष्णीय'–इति ग। † 'याजयेदिति'–इति ग। ‡ 'नेदिष्ठमा'–इति ग।

तच्छालां* वा विमितं वा प्राचीनवंशं मिन्वन्ति। प्राची हि देवानां दिक् पुरस्ताद्वै देवा प्रत्यञ्चो मनुष्यानुपावृत्तास्तस्मात्तेभ्यः प्राङ् तिष्ठन् जुहोति ॥ ६ ॥

तस्मादु ह न प्रतीचीनशिरा शयीत। नेद्देवानभि प्रसार्य शया इति या दक्षिणा दिक् सा पितॄणां या प्रतीची सा सर्पाणां यतो देवा उदक्रमुः सैषाहीना योदीची दिक् सा मनुष्याणां तस्मान् मानुष उदीचीनवंशा मेव शालां वा विमितं वा मिन्वन्त्युदीची हि मनुष्याणां दिग्दीक्षितस्यैव प्राचीनवंशा नादीक्षितस्य ॥ ७ ॥

तां वा एतां परिश्रयन्ति। नेदभिवर्षादिति न्वेव वर्षा देवान् वा एष उपावर्त्तते यो दीक्षते स देवतानां मेको भवति तिर इव वै देवा मनुष्येभ्यस्तिर इवैतद्यत् परिश्रितं तस्मात् परिश्रयन्ति ॥ ८ ॥

तत्र सर्व इवाभिप्रपद्येत। ब्राह्मणो वैव राजन्यो वा वैश्यो वा ते हि यज्ञियाः ॥ ९ ॥

स वै न सर्वेणेव संवदेत। देवान् वा एष उपावर्त्तते यो दीक्षते स देवतानां मेको भवति न वै देवाः सर्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा वैश्येन वा ते

---

* तच्छालां'-इति ग।

हि यज्ञियास्तस्माद्येनꣳ शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिममिति विचक्ष्वेममिति विचक्ष्वेत्येष उ तत्र दीक्षितस्योपचारः* ॥ १० ॥

अथारणी पाणौ धृत्वा†। शालां मध्यवस्यति स पूर्व्वार्द्धꣳ स्थूणाराजमभिपद्यैतद्यजुराहेदमगन्म देवयजनं पृथिव्या यत्र देवासो ऽअजुषन्त विश्व ऽइति तदस्य विश्वैश्च देवैर्जुष्टं भवति ये चेमे ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना यदु ह्यस्य तेऽक्षिभ्या मीक्षन्ते ब्राह्मणाः शुश्रुवाꣳसस्तदु हास्य तैर्जुष्टं भवति ॥ ११ ॥

यदाह। यत्र देवासो ऽअजुषन्त विश्व ऽइति तदस्य विश्वैर्देवैर्जुष्टं भवत्यृक्सामाभ्याꣳ सन्तरन्तो यजुर्भिरित्यृक्सामाभ्यां वै यजुर्भिर्यज्ञस्योदृचं गच्छन्ति यज्ञस्योदृचं गच्छानीत्येवैतदाह रायस्पोषेण समिषा मदेमेति भूमा वै रायस्पोषः श्रीर्वै भूमाशिषमेवैतदाशास्ते समिषा मदेमेतीषं मदतीति वै तमाहुर्यः श्रियमश्नुते यः परमतां गच्छति तस्मादाह समिषा मदेमेति ॥ १२ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् [१.१.] ॥

---

* 'चारः'-इति क, 'चार'-इति ख। † 'कृत्वा'-इति ग।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

आधानपुनराधाने अग्निहोत्रं ततः परम् ।
चातुर्मास्यानि च पशुर्द्वितीयकाण्ड ईरितम् ॥ २ ॥

अथ तृतीयचतुर्थाभ्यामेकाहाहीनसत्रलक्षणसकलसोमयाग[1]-प्रकृतिभूतोऽग्निष्टोमोऽभिधीयते[2] । तत्र तृतीयकाण्डस्य प्रथमाध्याये

---

१—"त्रिविधः सोमयागः, एकाहाहीनसत्रनामकः । एकस्मिन्नेवाहनि सवनत्रयेण निष्पाद्य एकाहः । द्विरात्रं मारभ्य एकादशरात्रपर्यन्ता अहीनाः । त्रयोदशरात्रं मारभ्य सहस्रसंवत्सरपर्यन्तानि सत्राणि । द्वादशाहस्तु द्विरूपः । तत्राहीनरूपेण द्विरात्रादीनां प्रकृतिः, सत्ररूपेण त्रयोदशरात्रादीनाम् । तस्य च द्वादशाहस्य एकाहरूपो ज्योतिष्टोमः प्रकृतिः"–इति तै० सं० १, २, १ सा० भा० । 'एकाहाहीनसत्राणि सोमभेदा इति त्रयः"–इत्यादि च तै० सं० ७, १, १ भाष्यारम्भे सायणः । 'उक्ताः प्रकृतयोऽहीनैकाहाः ( ६, १, १ )"–इत्यारभ्य "इत्येकाहाः, अथाहीना द्व्यहप्रभृतयो द्वादशरात्रपरार्द्धाः ( १०, १, १०, ११ )'–इत्यादान्त आश्वलायनीयश्रौतसूत्रग्रन्थश्चेहालोच्यः ।

२—"सप्तसंस्थः सोमयागो भवति । तथाहि— "अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति संस्थाः"–इति आश्व० श्रौ० सू० ६, ११, १ । अप्तोर्यामः आप्तोर्याम इत्यभिन्नः ।

३—'अग्निष्टोमं प्रथममस्त्र, अतिरात्रमेके पूर्वं समामनन्ति"–इति आप० श्रौ० सू० १०, २, ३, ४ । अग्निष्टोम इतराङ्गातन्त्योपदिष्टत्वात् स एवेतरेषां प्रकृतिः ।

